संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अजन्ते नपुंसकलिङ्गाः

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अकारान्तेषु ‘ज्ञान’शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

- सूत्रम्- **अतोऽम्॥ (७,१.२४)**
- सूत्रार्थः- अतोऽङ्गात् क्लीबात्स्वमोरम्। अमि पूर्वः। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः=मलोपः। हे ज्ञान।
- सूत्रम्- **नपुंसकाच्च॥ (७,१.१९)**
- सूत्रार्थः- क्लीबादौङः शी स्यात्। भसंज्ञायाम्॥
- सूत्रम्- **यस्येति च॥ (६,४.१४८)**
- सूत्रार्थः- ईकारे तद्धिते च परे भस्य इवर्ण-अवर्णयोर्लोपः(स्यात्)। इत्यल्लोपे प्राप्ते-
- वार्त्तिकम्- **(औङः श्यां प्रतिषेधो वाच्यः)**। ज्ञाने॥
- वार्त्तिकार्थः- औङ्स्थानिक‘शी’विभक्तौ ‘**यस्येति च**’ इति लोपो न प्रवर्त्तते।
- सूत्रम्- **जश्शसोः शिः॥ (७,१.२०)**
- सूत्रार्थः- क्लीबादनयोः शिः स्यात्॥

- सूत्रम्- **शि सर्वनामस्थानम्॥ (१,१.४२)**
- सूत्रार्थः- शि इत्येतदुक्तसंज्ञं स्यात्॥
- सूत्रम्- **नपुंसकस्य झलचः॥ (७,१.७२)**
- सूत्रार्थः- झलन्तस्याजन्तस्य च क्लीबस्य नुँम् स्यात् सर्वनामस्थाने॥
- सूत्रम्- **मिदचोऽन्त्यात्परः॥ (१,१.४७)**
- सूत्रार्थः- अचां मध्ये योऽन्त्यः तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्॥ एवं धन वन फलादयः॥

ज्ञान(प्रातिपदिकसञ्ज्ञा)
ज्ञान + स्
ज्ञान + अम्
ज्ञानम्

ज्ञान + जस्
ज्ञान + अस्
ज्ञान न् + इ
ज्ञाना न् + इ
ज्ञानानि

हे ज्ञान + स्
हे ज्ञानम्
हे ज्ञान

ज्ञान + औ
ज्ञान + शी
ज्ञान + ई
ज्ञाने

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ‘ज्ञान’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ज्ञानम् | ज्ञाने | ज्ञानानि |
| सम्बोधनम् | हे ज्ञान | हे ज्ञाने | हे ज्ञानानि |
| द्वितीया | ज्ञानम् | ज्ञाने | ज्ञानानि |
| तृतीया | ज्ञानेन | ज्ञानाभ्याम् | ज्ञानैः |
| चतुर्थी | ज्ञानाय | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| पञ्चमी | ज्ञानात्-द् | ज्ञानाभ्याम् | ज्ञानेभ्यः |
| षष्ठी | ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् |
| सप्तमी | ज्ञाने | ज्ञानयोः | ज्ञानेषु |

- अतोऽम्
- अतोऽम्, एङ्ह्रस्वात्..
- नपुंसकाच्च, आद्गुणः
- जश्शसोः शिः, नपुंसकस्य झलचः, सर्वनामस्थाने .....
- टाङसिङसामिनात्...
- ङेर्यः
- सुपि च
- अतो भिस् ऐस्
- बहुवचने झल्येत्
- ह्रस्वनद्यापो नुँट्, नामि
- आद्गुणः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अकारान्तेषु सर्वादिगणोक्तस्य 'कतर'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | कतरत्, कतरद् | कतरे | कतराणि |
| सम्बोधनम् | हे कतरत्, कतरद् | हे कतरे | हे कतराणि |
| द्वितीया | कतरत्, कतरद् | कतरे | कतराणि |
| तृतीया | कतरेण | कतराभ्याम् | कतरैः |
| चतुर्थी | कतरस्मै | कतराभ्याम् | कतरेभ्यः |
| पञ्चमी | कतरस्मात्-द् | कतराभ्याम् | कतरेभ्यः |
| षष्ठी | कतरस्य | कतरयोः | कतरेषाम् |
| सप्तमी | कतरस्मिन् | कतरयोः | कतरेषु |

- सूत्रम्- अद्ड्डतरादिभ्यः पञ्चभ्यः॥ (७,१.२५)
- सूत्रार्थः- एभ्यः=(१.डतर २. डतम ३.अन्य ४. अन्यतर ५. इतर) क्लीबेभ्यः स्वमोः अद्डादेशः स्यात्॥
- सूत्रम्- टेः॥ (६,४.१४३)
- सूत्रार्थः- डिति भस्य टेर्लोपः। कतरत्, कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्॥
- एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्।

- अद्ड्डतरादिभ्यः पञ्चभ्यः
- नपुंसकाच्च, आद्गुणः
- जश्शसोः शिः, नपुंसकस्य झलचः, सर्वनामस्थाने .....
- टाङसिङसामिनात्...
- सर्वनामकार्यम्
- सुपि च
- अतो भिस् ऐस्
- बहुवचने झल्येत्
- ओसि च

कतर + स्
कतर + अद्ड्
कतर + अद्
कतर्+ अद्
कतरत्, कतरद्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदन्तेषु'अन्यतम'आदिशब्दानां रूपाणि

## लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अन्यतमम् | अन्यतमे | अन्यतमानि |
| सम्बोधनम् | हे अन्यतम | हे अन्यतमे | हे अन्यतमानि |
| द्वितीया | अन्यतमम् | अन्यतमे | अन्यतमानि |
| तृतीया | अन्यतमेन | अन्यतमाभ्याम् | अन्यतमैः |
| चतुर्थी | अन्यतमाय | अन्यतमाभ्याम् | अन्यतमेभ्यः |
| पञ्चमी | अन्यतमात्-द् | अन्यतमाभ्याम् | अन्यतमेभ्यः |
| षष्ठी | अन्यतमस्य | अन्यतमयोः | अन्यतमानाम् |
| सप्तमी | अन्यतमे | अन्यतमयोः | अन्यतमेषु |

- अन्यतमस्य त्वन्यतममित्येव।
- अयं भावः-- (अन्यतर-अन्यतमशब्दौ अव्युत्पन्नप्रातिपदिकौ क्रमशः द्वि-बहुविषये निर्धारणेऽर्थे वर्त्तेते। न तु डतर-डतमान्तौ स्तः। तत्र अन्यतमशब्दस्य तु डतरादिमध्ये पाठाभावाद् अद्डादेशो न भवति। सर्वादिषु पाठाभावात् सर्वनामसञ्ज्ञाप्रयुक्तकार्याण्यपि न भवन्ति। तेन अन्यतमम् इत्यादीनि ज्ञानशब्दवद्रूपाणि भवन्तीति।)
- वार्त्तिकम्- (एकतरात्प्रतिषेधो वक्तव्यः)। एकतरम्॥
- वार्त्तिकार्थः- एकतर-शब्दात् परयोः स्वमोर्-अद्डादेशो न स्यात्।

संस्कृतसार:
छिद्यन्ते सर्वसंशयाः

# आकारान्तेषु 'श्रीपा'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | श्रीपम् | श्रीपे | श्रीपाणि |
| सम्बोधनम् | हे श्रीपम् | हे श्रीपे | हे श्रीपाणि |
| द्वितीया | श्रीपम् | श्रीपे | श्रीपाणि |
| तृतीया | श्रीपेण | श्रीपाभ्याम् | श्रीपैः |
| चतुर्थी | श्रीपाय | श्रीपाभ्याम् | श्रीपेभ्यः |
| पञ्चमी | श्रीपात्-द् | श्रीपाभ्याम् | श्रीपेभ्यः |
| षष्ठी | श्रीपस्य | श्रीपयोः | श्रीपाणाम् |
| सप्तमी | श्रीपे | श्रीपयोः | श्रीपेषु |

- ❖ सूत्रम्- ह्रस्वो नपुंसके प्रातिपदिकस्य॥
- ❖ सूत्रार्थः- अजन्तस्येत्येव ( नपुंसकलिङ्गे विद्यमानस्य अजन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्)। श्रीपं ज्ञानवत्॥

- ❖ अतोऽम्
- ❖ अतोऽम्, एङ्ह्रस्वात्..
- ❖ नपुंसकाच्च, आद्गुणः
- ❖ जश्शसोः शिः, नपुंसकस्य झलचः, सर्वनामस्थाने .....
- ❖ टाङसिङसामिनात्...
- ❖ ङेर्यः
- ❖ सुपि च
- ❖ अतो भिस् ऐस्
- ❖ बहुवचने झल्येत्
- ❖ ह्रस्वनद्यापो नुँट्, नामि
- ❖ आद्गुणः
- ❖ ओसि च

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु ‘वारि’शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | वारि+ स्<br>वारि | वारि+ औ<br>वारि न्+ ई<br>वारिणी | वारि+ अस्<br>वारि न्+ इ<br>वारीणि |
| सम्बोधनम् | हे वारि+ स्<br>हे वारे, हे वारि | हे वारिणी | हे वारीणि |
| द्वितीया | वारि | वारिणी | वारीणि |
| तृतीया | वारि+ आ<br>वारि+ ना<br>वारिणा | वारिभ्याम् | वारिभिः |

- सूत्रम्- स्वमोर्नपुंसकात्॥ (७,१.२३)
- सूत्रार्थः- ( क्लीबाद् अङ्गात् परयोः स्वमोर्) लुक् स्यात्। वारि॥
- सूत्रम्- इकोऽचि विभक्तौ॥ (७,१.७३)
- सूत्रार्थः- इगन्तस्य क्लीबस्य नुँमचि विभक्तौ। वारिणी। वारीणि।
- न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः। हे वारे, हे वारि। (आङो ना। वारिणा।)

- स्वमोर्नपुंसकात्
- इकोऽचि विभक्तौ
- आङो नास्त्रियाम्
- ह्रस्वनद्यापो नुँट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु 'वारि'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| | | | |
|---|---|---|---|
| चतुर्थी | वारि+ ए<br>वारिन्+ ए<br>वारिणे | वारिभ्याम् | वारिभ्यः |
| पञ्चमी | वारि+ अस्<br>वारिन्+ अस्<br>वारिणः | वारिभ्याम् | वारिभ्यः |
| षष्ठी | वारि+ अस्<br>वारिन्+ अस्<br>वारिणः | वारि+ ओस्<br>वारिन्+ ओस्<br>वारिणोः | वारीणाम् |
| सप्तमी | वारि+ इ<br>वारिन्+ इ<br>वारिणि | वारि+ ओस्<br>वारिन्+ ओस्<br>वारिणोः | वारिषु |

- (वारिशब्दाद् ङिद्विभक्तिषु)घेर्ङितीति गुणे प्राप्ते—
- वार्त्तिकम्—(वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुँम् पूर्वविप्रतिषेधेन)।
- वार्तिकार्थः— ( 'अतिसखिनी' इत्यत्र 'सख्युरसम्बुद्धौ' इति सूत्रेण णिद्वद्भावात् 'अचो ञ्णिति' इति सूत्रेण प्राप्तं वृद्धिम्, 'वारिणि'इत्यत्र 'अच्च घेः' इति सूत्रेण प्राप्तमौत्त्वम्, 'प्रियक्रोष्टुनि' इत्यत्र 'तृज्वत्क्रोष्टुः, विभाषा तृतीयादिष्वचि' इति सूत्राभ्यां प्राप्तं तृज्वद्भावम्, 'वारिणे वारिणः' इत्यादौ 'घेर्ङिति' इत्यनेन प्राप्तं गुणं बाधित्वा पूर्वविप्रतिषेधेन 'नुँम्' भवति ) वारिणे। वारिणः-२। वारिणोः-२। नुँमचिरेति (वात्तिकेन) नुँट्। वारीणाम्। वारिणि। हलादौ हरिवत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ❖ न लुमताङ्गस्य इति निषेधस्य अनित्यता



- ❖ शिष्यः— प्रणमामि गुरुदेव।
- ❖ गुरुः — विद्यावान् भव वत्स।
- ❖ शिष्यः — नपुंसकलिङ्गे वारिशब्दस्य कति रूपाणि सम्बोधने।
- ❖ गुरुः — रूपद्वयं भवति हे वारे ,हे वारि इति तु पूर्वं पठितमपि ।
- ❖ शिष्यः — हम तत्र विकल्पविधादयकं किमपि सूत्रं नास्ति तर्हि कथं रुपद्वयसिद्धिः अतोऽधीतमपि विषयं पुनः ।
- ❖ गुरुः — चिन्ता मास्तु यावत्पर्यन्तं शतवारमपि पृच्छ पुनः सावधानेन चेतसा शृणु—
- ❖ शिष्यः — (प्रसन्नमनसा) आम् गुरुदेव।
- ❖ गुरुः — वारि शब्दात् सम्बोधने प्रथमैकवचने अनुबन्धलोपे कृते हेवारि+स् इति जाते नपुंसकवारिशब्दात्परस्य 'स्वमोर्नपुंसकादि'ति सूत्रेण सोर्लुकि 'हे वारि' इति जाते 'प्रत्ययलोपे प्रत्ययलक्षणमि' ति सूत्रेण प्रत्ययलक्षणे कृते सति 'ह्रस्वस्य गुणः' इति सूत्रेण ..................
- ❖ शिष्यः — आचार्य प्रत्ययलक्षणं किं भवति ?
- ❖ गुरुः — एतदर्थं 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यस्य सूत्रार्थं स्मरतु
- ❖ शिष्यः — प्रत्ययस्य लुप्तेऽपि तन्निमित्तकानि अङ्गकार्याणि भवन्ति ।
- ❖ गुरुः — साधु अत एव 'हे वारि' इत्यत्र सुँ इति विभक्तेः सकार लुप्तेऽपि तन्निमित्तकं (सकारनिमित्तकं) अङ्गकार्यं 'ह्रस्वस्य गुणः' इति सूत्रेण गुणकार्यं भवति तेन
- ❖ शिष्यः — आचार्य प्रत्ययलक्षणस्य निषेधस्तु न लुमताङ्गस्य इति सूत्रं करोति यथा कति+जस् इत्यत्र षड्भ्यो लुकि कृते प्रत्ययलक्षणमाश्रित्य जसि च सूत्रेण प्राप्तमपि गुणं तत्र 'न लुमताङ्गस्य' इति सूत्रेण प्रत्ययलक्षणनिषेधात् न भवति तद्वदत्रापि 'हे वारि' इत्यत्र न लुमताङ्गस्य इति सूत्रेण 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रेण प्राप्तस्य प्रत्ययलक्षणस्य निषेधात् ।
- ❖ सम्बुद्धौ (सुँविभक्तौ तु) तन्निमित्तकं ह्रस्वस्य गुणः इत्यनेन गुणोऽत्र न भवेत् तेनात्र 'हे वारि' इति एकमेव रूपं स्यात् हे वारे इति गुणयुक्तं रूपं तु न स्यात्।
- ❖ गुरुः — रूपद्वयमपि सिद्धयति भोः।
- ❖ शिष्यः — कथम् ?

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ❖ न लुमताङ्गस्य इति निषेधस्य अनित्यता



❖ गुरुः — 'न लुमुताङ्गस्य' इति निषेधस्य अनित्यत्वात् ।

❖ शिष्यः — अनित्यत्वन्नाम।

❖ गुरुः — लक्ष्ये (प्रयोगे) कदाचित्सूत्रस्य प्रवृत्तिः कदाचिदप्रवृत्तिश्च चेन न लुमताङ्गस्य इति प्रत्ययलक्षणनिषेधकं सूत्र यदा न प्रवर्त्तते तस्मिन् पक्षे प्रत्ययलक्षणमाश्रित्य तन्निमित्तकं 'ह्रस्वस्य गुणः' इति सूत्रेण सम्बुद्धिमाश्रित्य गुणे कृते 'हे वारे' इति रुपं भवति एवञ्च यस्मिन् पक्षे 'न लुमताङ्गस्य' इति निषेधः प्रवर्त्तते तस्मिन् पक्षे प्रत्ययलक्षणन्न भवति, अतः तत्प्रत्ययनिमित्तकं (सुँनिमित्तकं) 'ह्रस्वस्य गुणः' इति सूत्रेण गुणकार्यमपीह न भवति तेन हे वारि इति रुपमपि सिद्धयति इत्थं 'न लुमताङ्गस्य' इति निषेधस्य अनित्यतया रुपद्वयसिद्धिर्भवति

❖ शिष्यः — ओह किन्तु आचार्य न लुमताङ्गस्य इति सूत्रस्य प्रत्ययलक्षणनिषेधो नित्य इति कथं ज्ञायते ।

❖ शिष्यः — ओह! किन्तु आचार्य! "न लुमताङ्गस्य" इति सूत्रस्य प्रत्ययलक्षणनिषेधोऽनित्य इति कथं जायते?

❖ गुरुः —'इकोऽचि विभक्तौ' इति सूत्रे 'अचि' ग्रहणाद् ज्ञायते यद् 'न लुमताङ्गस्य' निषेधोऽनित्य इति।

❖ शिष्यः — तत्कथम्?

❖ गुरुः — यदि 'इकोऽचि विभक्तौ' इति सूत्रे 'अचि' इति पदं न दीयते चेत् तदपि कुत्रापि दोषो न स्यात्।

❖ शिष्यः — अयि! आचार्य! 'अचि' इति पदाभावे तु भ्यां-भ्यसादिषु हलादिविभक्तिष्वपि 'नुँम्' स्यात्।

❖ गुरुः — सत्यं वदति वत्स! किन्तु भ्याम्-भिसादिषु हलादिविभक्तिषु नुँमि सत्यपि न दोषः। यतोहि तत्र 'स्वादिष्वसर्वनामस्थाने' इति सूत्रेण पदसञ्ज्ञाकारणाद् 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण 'नुँम्' नकारस्य लोपे भ्याम्-भिसादि हलादिविभक्तिषु नकार श्रवणमपि न स्याद्। अतो हलादिविभक्तिषु 'नुँम्' वारणार्थम् 'इकोऽचि विभक्तौ' इति सूत्रे 'अचि' इति पदं व्यर्थम्।

# ❖ न लुमताङ्गस्य इति निषेधस्य अनित्यता



❖ शिष्यः — भो आचार्य! सम्बुद्धौ=सम्बोधने प्रथमैकवचने सुविभक्तौ तु 'न ङिसम्बुद्धयोः' इति सूत्रेण नकारलोपनिषेधे 'हे वारिन्' इत्यादौ नकारश्रवणं स्याद् अतस्तद्वारणाय 'इकोऽचि विभक्तौ' इति 'नुँम्' विधायके सूत्रेऽचीति पदं सार्थकमस्ति।

❖ गुरुः — अयि सुमते! 'हे वारि+स्' इत्यत्र सम्बुद्धौ तु सोः सकारस्य 'स्वमोर्नपुंसकात्' इति सूत्रेण लुक्शब्द द्वारा लुप्तत्वेन विभक्तिपरत्वाभावेन नुँम् न स्यात्। अतः सम्बुद्धावपि नुँमः नकारश्रवणं न स्यात्।

❖ शिष्यः — अत्र तु 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन प्रत्ययस्य लुप्ते=सोः सकारस्य लुप्तेऽपि तन्निमित्तकं 'नुँम्' कार्यं कथं न भवितुर्महति?

❖ गुरुः —'हे वारि+स्' अत्र सकारस्य लुक्शब्दद्वारा अदर्शनमस्ति, अतः 'न लुमताङ्गस्य' इति सूत्रेण प्रत्ययलक्षणस्य निषेधो भवति। तेन सुँ इति प्रत्ययस्य परत्वाभावेन सम्बुद्धावपि नुँमः नकारश्रवणं न स्यात्। अतः 'इकोऽचिविभक्तौ' इति सूत्रे 'अचि' इति पदाभावे अपि 'हे वारि' 'वारिभ्याम्' इत्यादिषु दोषो नास्ति।

❖ 'दोषो नास्ति' इति जानन्नपि आचार्यः पाणिनिः 'इकोऽचि विभक्तौ' इति सूत्रेण 'अचि' पदग्रहणं करोति तेन ज्ञायते 'न लुमताङ्गस्य' निषेधोऽनित्यो वर्त्तते।

❖ शिष्यः — तत्कथं ज्ञायते?

❖ गुरुः — यदि 'न लुमताङ्गस्य' इति सूत्रेण प्रत्ययलक्षणनिषेधो नित्यः स्यात्तर्हि 'हे वारि+स्' इत्यत्र सोर्लुकि पुनः प्रत्ययलक्षणं 'न लुमताङ्गस्य' इति नित्यनिषेधेन कदापि नुँम् न स्यात्। एतदर्थम् 'अचि' ग्रहणम् अनावश्यकम्। किन्तु आचार्यः पाणिनि "इकोऽचि विभक्तौ" इत्यत्र अचि ग्रहणं करोति, तेन ज्ञायते यत् 'न लुमताङ्गस्य' इति निषेधोऽनित्य इति।

❖ तदा यस्मिन् पक्षे 'न लुमताङ्गस्य' सूत्रं न प्रवर्त्तते तस्मिन् पक्षे प्रत्ययलोपे प्रत्ययलक्षणेन सम्बुद्धिनिमित्तके 'ह्रस्वस्य गुणः' इति सूत्रेण गुणे कृते- 'हे वारे!' इति रूपम् यस्मिन् पक्षे 'न लुमताङ्गस्य' इति सूत्रं प्रवर्त्तते तदा प्रत्ययलक्षणनिषेधेन गुणो न भवति, तस्मात् कारणाद्- हे वारि इत्यपि रूपं भवति।

❖ शिष्यः — विषयो ज्ञातो गुरुदेव! धन्यवादः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु 'दधि'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | दधि+ स्<br>दधि | दधि+ औ<br>दधि न्+ ई<br>दधिनी | दधि+ अस्<br>दधि न्+ इ<br>दधीनि |
| सम्बोधनम् | हे दधि+ स्<br>हे दधे, हे दधि | हे दधिनी | हे दधीनि |
| द्वितीया | दधि | दधिनी | दधीनि |
| तृतीया | दधि+ आ<br>दध् अन् + आ<br>दध् न्+ आ<br>दध्ना | दधिभ्याम् | दधिभिः |

अङ्गसंज्ञकः

- सूत्रम्- अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः॥
- सूत्रार्थः- एषामनङ् स्याट्टादावचि॥
- सूत्रम्- अल्लोपोऽनः॥ (६,४.१३४)
- सूत्रार्थः- अङ्गावयवोऽसर्वनामस्थान-यजादि-स्वादिपरो योऽन्, तस्याकारस्य लोपः।
- दध्ना। दध्ने। दध्नः। दध्नः। दध्नोः। दध्नोः॥
- सरलार्थः- अङ्गसंज्ञकसमुदायस्य अवयवो योऽन् तस्य अकारस्य लोपः स्यात्, सर्वनास्थानभिन्ने यकारादिप्रत्यये परे अथवा अजादिस्वादिप्रत्यये परे।

- स्वमोर्नपुंसकात्
- इकोऽचि विभक्तौ

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# इकारान्तेषु 'दधि'शब्दस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| | | | |
|---|---|---|---|
| चतुर्थी | दधि+ए<br>दध् अन्+ए<br>दध् न्+ए<br>दध्ने | दधिभ्याम् | दधिभ्यः |
| पञ्चमी | दधि+अस्<br>दध् अन्+अस्<br>दध् न्+अस्<br>दध्नः | दधिभ्याम् | दधिभ्यः |
| षष्ठी | दध्नः | दध्नोः | दध्नाम् |
| सप्तमी | दधि+इ<br>दध् अन्+इ=2.दधनि<br>दध् न्+इ= 1.दध्नि | दध्नोः | दधिषु |

- सूत्रम्- विभाषा ङिश्योः॥ (६,४.१३६)
- सूत्रार्थः- अङ्गावयवोऽसर्वनामस्थान-यजादि-स्वादिपरो योऽन्, तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः।
- दध्नि, दधनि। शेषं वारिवत्॥
- एवमस्थिसक्थ्यक्षि॥
- सरलार्थः- अङ्गसंज्ञकसमुदायस्य अवयवो योऽन् तस्य अकारस्य वा लोपः स्यात्, सर्वनास्थानभिन्ने यकारादौ प्रत्यये परे अथवा अजादिस्वादिप्रत्ययेषु ङि-शी परयोः।

- अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ईकारान्तेषु ‘सुधी’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुधि | सुधिनी | सुधीनि |
| सम्बोधनम् | हे सुधे, हे सुधि | हे सुधिनी | हे सुधीनि |
| द्वितीया | सुधि | सुधिनी | सुधीनि |
| तृतीया | सुधिया, सुधिना | सुधिभ्याम् | सुधीभिः |
| चतुर्थी | सुधिये, सुधिने | सुधिभ्याम् | सुधिभ्यः |
| पञ्चमी | सुधियः, सुधिनः | सुधिभ्याम् | सुधिभ्यः |
| षष्ठी | सुधियः, सुधिनः | सुधियोः, सुधिनोः | सुधियाम् ,सुधीनाम् |
| सप्तमी | सुधियि, सुधिनि | सुधियोः, सुधिनोः | सुधिषु |

- सुधि। सुधिनी। सुधीनि। हे सुधे, हे सुधि॥
- सूत्रम्- तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य॥
- सूत्रार्थः- प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कम् इगन्तं क्लीबं पुंवद्वा टादावचि। सुधिया, सुधिनेत्यादि॥
- प्रवृत्तिनिमित्तम्— प्रवृत्तेः= मुख्यार्थज्ञानस्य, निमित्तम्= कारणं शक्यतावच्छेदकम्। अर्थात् यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते तद्विशेषणं (वाच्यतावच्छेदकम्) इत्युच्यते। यथा घटस्य घटत्वम्, सुधीशब्दस्य सुध्यातृत्वं प्रवृत्तिनिमित्तं भवति
- भाषितपुंस्कम्— भाषितः पुमान् यस्मिन्नर्थे तद् भाषितपुंस्कम् (प्रवृत्तिनिमित्तम्) तद् अस्य अस्तीति तद् भाषितपुंस्कम् इति।
  यन्निमित्तमुपादाय पुंसिशब्दः प्रवर्तते।
  क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदुच्यते॥

- वारिवत्
- विकल्पेन पुंवद्भावः, इयङ्, नुँम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उकारान्तेषु ‘मधु’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | मधु | मधुनी | मधूनि |
| सम्बोधनम् | हे मधो, हे मधु | हे मधुनी | हे मधूनि |
| द्वितीया | मधु | मधुनी | मधूनि |
| तृतीया | मधुना | मधुभ्याम् | मधुभिः |
| चतुर्थी | मधुने | मधुभ्याम् | मधुभ्यः |
| पञ्चमी | मधुनः | मधुभ्याम् | मधुभ्यः |
| षष्ठी | मधुनः | मधुनोः | मधूनाम् |
| सप्तमी | मधुनि | मधुनोः | मधुषु |

- मधु। मधुनी। मधूनि। हे मधो, हे मधु॥
- मधु पुष्परसे मधुर्वसन्ते चैत्रे च इति कोशात् पुन्नपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति। नपुंसके मद्यत्वं पुँल्लिङ्गे वसन्तत्वादिरूपं भिन्नं भिन्नं प्रवृत्तिनिमित्तं वर्त्तते। अतो न पुंवत्।

- स्वमोर्नपुंसकात्-लुक्
- इकोऽचि विभक्तौ- नुँम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऊकारान्तेषु ‘सुलू’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | सुलु | सुलुनी | सुलूनि |
| सम्बोधनम् | हे सुलो, हे सुलु | हे सुलुनी | हे सुलूनि |
| द्वितीया | सुलु | सुलुनी | सुलूनि |
| तृतीया | सुल्वा, सुलुना | सुलुभ्याम् | सुलुभिः |
| चतुर्थी | सुल्वे, सुलुने | सुलुभ्याम् | सुलुभ्यः |
| पञ्चमी | सुल्वः, सुलुनः | सुलुभ्याम् | सुलुभ्यः |
| षष्ठी | सुल्वः, सुलुनः | सुल्वोः, सुलुनोः | सुल्वाम्, सुलूनाम् |
| सप्तमी | सुल्वि, सुलुनि | सुल्वोः, सुलुनोः | सुलुषु |

- सुलु। सुलुनी। सुलूनि। सुलुनेत्यादि॥
- अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोः समानम्।

- स्वमोर्नपुंसकात्-लुक्
- इकोऽचि विभक्तौ- नुँम्
- ओः सुपि- यण्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऋकारान्तेषु 'धातृ'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | धातृ | धातृणी | धातॄणि |
| सम्बोधनम् | हे धातृ, हे धातः | हे धातृणी | हे धातॄणि |
| द्वितीया | धातृ | धातृणी | धातॄणि |
| तृतीया | धात्रा, धातृणा | धातृभ्याम् | धातृभिः |
| चतुर्थी | धात्रे, धातृणे | धातृभ्याम् | धातृभ्यः |
| पञ्चमी | धातुः, धातृणः | धातृभ्याम् | धातृभ्यः |
| षष्ठी | धातुः, धातृणः | धात्रोः, धातृणोः | धातॄणाम् |
| सप्तमी | धातरि, धातृणि | धात्रोः, धातृणोः | धातृषु |

- ❖ धातृ । धातृणी । धातॄणि । हे धातः, हे धातृ । धातॄणाम् ॥ एवं ज्ञात्रादयः ॥
- ❖ अत्र धारणपोषणकर्तृत्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोः समानम् ।

- ❖ स्वमोर्नपुंसकात्-लुक्
- ❖ इकोऽचि विभक्तौ- नुँम्
- ❖ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य- पुंवद्-रूपाणि
- ❖ नुँट्, नुँम्

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# ओकारान्तेषु ‘प्रद्यो’शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम् (अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्रद्यु | प्रद्युनी | प्रद्यूनि |
| सम्बोधनम् | हे प्रद्यु, हे प्रद्यो | हे प्रद्युनी | हे प्रद्यूनि |
| द्वितीया | प्रद्यु | प्रद्युनी | प्रद्यूनि |
| तृतीया | प्रद्युना | प्रद्युभ्याम् | प्रद्युभिः |
| चतुर्थी | प्रद्युने | प्रद्युभ्याम् | प्रद्युभ्यः |
| पञ्चमी | प्रद्युनः | प्रद्युभ्याम् | प्रद्युभ्यः |
| षष्ठी | प्रद्युनः | प्रद्युनोः | प्रद्यूनाम् |
| सप्तमी | प्रद्युनि | प्रद्युनोः | प्रद्युषु |

- सूत्रम्- एच इग्घ्रस्वादेशे॥ (१,१.४८)
- सूत्रार्थः- आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि॥
- अत्र यद् इगन्तं ‘प्रद्यु’ इति तन्न भाषितपुस्कम्। यच्च भाषितपुस्कं ‘प्रद्यो’ इति तन्न इगन्तम् अतो नात्र पुंवद्भावो भवति। इत्थं प्ररि,सुनु इत्यादावपि ज्ञेयम्

ए → ओ → ऐ → औ

इ → उ → इ → उ

- स्वमोर्नपुंसकात्-लुक्
- इकोऽचि विभक्तौ- नुँम्
- नुँट्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# ऐकारान्तेषु 'प्रै'शब्दस्य रूपाणि

लघुसिद्धान्तकौमुद्याम्
(अजन्तनपुंसकलिङ्गाः)

| विभक्तयः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | प्ररि | प्ररिणी | प्रीणि |
| सम्बोधनम् | हे प्ररि, प्ररे | हे प्ररिणी | हे प्रीणि |
| द्वितीया | प्ररि | प्ररिणी | प्रीणि |
| तृतीया | प्ररिणा | प्राभ्याम् | प्राभिः |
| चतुर्थी | प्ररिणे | प्राभ्याम् | प्राभ्यः |
| पञ्चमी | प्ररिणः | प्राभ्याम् | प्राभ्यः |
| षष्ठी | प्ररिणः | प्ररिणोः | प्रीणाम् |
| सप्तमी | प्ररिणि | प्ररिणोः | प्रासु |

- प्ररि। प्ररिणी। प्रीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्राभ्याम्। प्रीणाम्॥
- सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि॥

**इत्यजन्तनपुंसकलिङ्गाः।**

- स्वमोर्नपुंसकात्-लुक्
- इकोऽचि विभक्तौ- नुँम्
- नुँट्